# चम्पूरामायणे

# बालकाण्डम्

३९ – २२.१०.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥

# पुनरावर्तनम्

- असौ वसिष्ठनिर्देशात्
- इति जनकपुरोधःश्लाघितो
- मिथिलाप्रवेशः
- मिथिलामाहात्म्यम्

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

देव्या यस्या वसनमुदधिः पीठिका हाटकाद्रि-
र्हारः सिन्धुः सगरतनयस्वर्गमार्गैकबन्धुः।
क्रीडाशैलः प्रथमपुरुषक्रोडदंष्ट्रा च तस्याः
सीतामातुर्जगति मिथिलां सूतिकागेहमाहुः॥१००॥

- देव्याः, यस्याः, वसनम्, उदधिः, पीठिका, हाटक-अद्रिः, हारः, सिन्धुः, सगर-तनय-स्वर्ग-मार्ग-एक-बन्धुः, क्रीडा-शैलः, प्रथम-पुरुष-क्रोड-दंष्ट्रा, च, तस्याः, सीता-मातुः, जगति, मिथिलाम्, सूतिका-गेहम्, आहुः

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

देव्या यस्या वसनमुदधिः पीठिका हाटकाद्रिर्हारः सिन्धुः सगरतनयस्वर्गमार्गैकबन्धुः।
क्रीडाशैलः प्रथमपुरुषक्रोडदंष्ट्रा च तस्याः सीतामातुर्जगति मिथिलां सूतिकागेहमाहुः॥१००॥

- आहुः = वदन्ति
- काम् आहुः? मिथिलाम् = मिथिलानगरीम्
- किमिति आहुः? सूतिकागेहम् = प्रसवगृहम्
- कुत्र आहुः? जगति = प्रपञ्चे
- कस्याः सूतिकागेहम्? तस्याः सीतामातुः = सीताजनन्याः भूदेव्याः

देव्या यस्या वसनमुदधिः पीठिका हाटकाद्रिर्हारः सिन्धुः सगरतनयस्वर्गमार्गैकबन्धुः।
क्रीडाशैलः प्रथमपुरुषक्रोडदंष्ट्रा च तस्याः सीतामातुर्जगति मिथिलां सूतिकागेहमाहुः॥१००॥

- कथम्भूतायाः तस्याः? यस्याः देव्याः उदधिः वसनम्, हाटकाद्रिः पीठिका, सगरतनयस्वर्गमार्गैकबन्धुः सिन्धुः हारः, प्रथमपुरुषक्रोडदंष्ट्रा क्रीडाशैलः च
- वसनम् = वस्त्रम्
- उदधिः = समुद्रः
- पीठिका = आसनम्
- हाटकाद्रिः = स्वर्णाचलः

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

देव्या यस्या वसनमुदधिः पीठिका हाटकाद्रिर्हारः सिन्धुः सगरतनयस्वर्गमार्गैकबन्धुः।
क्रीडाशैलः प्रथमपुरुषक्रोडदंष्ट्रा च तस्याः सीतामातुर्जगति मिथिलां सूतिकागेहमाहुः॥१००॥

- हारः = मालिका
- सिन्धुः = नदी
- कीदृशी सिन्धुः? सगरतनयस्वर्गमार्गैकबन्धुः = सगरतनयानां स्वर्गप्रापिका गङ्गा
- क्रीडाशैलः = लीलापर्वतः, विहाराचलः
- प्रथमपुरुषक्रोडदंष्ट्रा = आदिपुरुषस्य विष्णोः वराहरूपस्य दन्तः

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

देव्या यस्या वसनमुदधिः पीठिका हाटकाद्रिर्हारः सिन्धुः सगरतनयस्वर्गमार्गैकबन्धुः।
क्रीडाशैलः प्रथमपुरुषक्रोडदंष्ट्रा च तस्याः सीतामातुर्जगति मिथिलां सूतिकागेहमाहुः॥१००॥

- अन्वयः – यस्याः देव्याः उदधिः वसनम्, हाटकाद्रिः पीठिका, सगरतनयस्वर्गमार्गैकबन्धुः सिन्धुः हारः, प्रथमपुरुषक्रोडदंष्ट्रा क्रीडाशैलः च तस्याः सीतामातुः जगति मिथिलां सूतिकागेहम् आहुः ।
- तात्पर्य्यम् – विश्वम्भरायाः भूदेव्याः समुद्र एव वस्त्रम्, स्वर्णाचलः आसनम्, गङ्गानदी मालिका, वराहरूपस्य विष्णोः दंष्ट्रा एव क्रीडापर्वतः । तादृश्याः वसुमत्याः प्रसवगृहं मिथिलानगरी (अत्रैव तत्पुत्र्याः सीतायाः जननत्वात्) – एतदेव तस्याः परमं माहात्म्यम् इत्यर्थः ।

देव्या यस्या वसनमुदधिः पीठिका हाटकाद्रिर्हारः सिन्धुः सगरतनयस्वर्गमार्गैकबन्धुः।
क्रीडाशैलः प्रथमपुरुषक्रोडदंष्ट्रा च तस्याः सीतामातुर्जगति मिथिलां सूतिकागेहमाहुः॥१००॥

- वसनम् – "वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम्" (अमरः)
- उदधिः – "उदन्वान् उदधिः सिन्धुः" (अमरः)
- हाटकाद्रिः – हाटकस्य अद्रिः । "स्वर्णं सुवर्णं कनकं हिरण्यं हेम-हाटकम्" (अमरः)
- सिन्धुः – "देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्" (अमरः)

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam - Value Education - Technology

देव्या यस्या वसनमुदधिः पीठिका हाटकाद्रिर्हारः सिन्धुः सगरतनयस्वर्गमार्गैकबन्धुः।
क्रीडाशैलः प्रथमपुरुषक्रोडदंष्ट्रा च तस्याः सीतामातुर्जगति मिथिलां सूतिकागेहमाहुः॥१००॥

- सगरतनयस्वर्गमार्गैकबन्धुः – सगरस्य तनयाः, स्वर्गस्य मार्गः, सगरतनयानां स्वर्गमार्गः, एकः बन्धुः, सगर...मार्गस्य एकबन्धुः
- प्रथमपुरुषक्रोडदंष्ट्रा – प्रथमः पुरुषः, प्रथमपुरुषश्च असौ क्रोडश्च, प्रथमपुरुषक्रोडस्य दंष्ट्रा । “वराहः सूकरो घृष्टिः.. क्रोडो भूदार इत्यपि”
- सूतिकागेहम् – सूतिकायाः गेहम् । “गृहं गेहोदवसितम्” (अमरः)
- रूपकालङ्कारः, अधिकालङ्कारः
- मन्दाक्रान्ता वृत्तम्

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# तत्र सीताविवाहार्थममरैरपि दुष्करम्।
# जनकः कल्पयामास धनुरारोपणं पणम्॥१०१॥

- तत्र, सीता-विवाह-अर्थम्, अमरैः, अपि, दुष्करम्, जनकः, कल्पयामास, धनुः-आरोपणम्, पणम्
- तत्र = तादृश्यां मिथिलायाम्
- कल्पयामास = निश्चितवान्
- कः कल्पयामास? जनकः = मिथिलायाः महाराजः, सीतायाः पिता

# तत्र सीताविवाहार्थममरैरपि दुष्करम्।
# जनकः कल्पयामास धनुरारोपणं पणम्॥१०१॥

- कम् कल्पयामास? पणम् = मूल्यम्
- किंरूपं पणं कल्पयामास? धनुरारोपणम् = हरकोदण्डस्य ज्याबन्धनरूपम्
- कथम्भूतं धनुरारोपणम्? दुष्करम् = कर्तुम् अशक्यम्
- कीदृशैः दुष्करम्? अमरैः अपि = देवैः अपि
- किमर्थं कल्पयामास? सीताविवाहार्थम् = पुत्र्याः उद्वाहार्थम्

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# तत्र सीताविवाहार्थममरैरपि दुष्करम्।
# जनकः कल्पयामास धनुरारोपणं पणम्॥१०१॥

- अन्वयः – तत्र सीताविवाहार्थं जनकः अमरैः अपि दुष्करं धनुरारोपणं पणं कल्पयामास ।
- तात्पर्य्यम् – मिथिलायाः राजा जनकः पुत्र्याः सीतायाः उद्वाहार्थं देवैरप्यशक्यं हरकोदण्डस्य ज्याबन्धनरूपं मूल्यं निश्चितवान् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# तत्र सीताविवाहार्थममरैरपि दुष्करम्।
# जनकः कल्पयामास धनुरारोपणं पणम्॥१०१॥

- दुष्करम् – दुस् + “डुकृञ् करणे” + खल् (कृत्) – “ईषद्-दुः-सुषु कृच्छ्र-अकृच्छ्रार्थेषु खल्”
- धनुरारोपणम् – धनुषः आरोपणम् ।
- पणम् – “पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च” (अमरः)
- अनुष्टुप् छन्दः

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

ततो महर्षिर्जनकस्य राज्ञः
सभां सुधर्मासदृशीं प्रपेदे।
तौ चापतुश्चापविलोकलोलौ
सचापकौ कोसलराजपुत्रौ॥१०२॥

- ततः, महर्षिः, जनकस्य, राज्ञः, सभाम्, सुधर्मा-सदृशीम्, प्रपेदे, तौ, च, आपतुः, चाप-विलोक-लोलौ, स-चापकौ, कोसल-राज-पुत्रौ

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

ततो महर्षिर्जनकस्य राज्ञः सभां सुधर्मासदृशीं प्रपेदे।
तौ चापतुश्चापविलोकलोलौ सचापकौ कोसलराजपुत्रौ॥१०२॥

- ततः = सीतावृत्तान्तश्रवणानन्तरम्
- प्रपेदे = प्राप्तवान्
- कः प्रपेदे? महर्षिः = विश्वामित्रः
- कां प्रपेदे? सभाम् = आस्थानम्
- कस्य सभाम्? राज्ञः जनकस्य

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam · Value Education · Technology

ततो महर्षिर्जनकस्य राज्ञः सभां सुधर्मासदृशीं प्रपेदे।
तौ चापतुश्चापविलोकलोलौ सचापकौ कोसलराजपुत्रौ॥१०२॥

- कीदृशीं सभां प्रपेदे? सुधर्मासदृशीम् = इन्द्रसभातुल्याम्
- आपतुः = प्राप्तवन्तौ
- कौ आपतुः? तौ कोसलराजपुत्रौ = रामलक्ष्मणौ
- कीदृशौ कोसलराजपुत्रौ? सचापकौ = धनुर्धरौ
- पुनः कीदृशौ कोसलराजपुत्रौ? चापविलोकलोलौ = शिवधनुर्दर्शनोत्सुकौ

ततो महर्षिर्जनकस्य राज्ञः सभां सुधर्मासदृशीं प्रपेदे।
तौ चापतुश्चापविलोकलोलौ सचापकौ कोसलराजपुत्रौ॥१०२॥

- अन्वयः – ततः महर्षिः राज्ञः जनकस्य सुधर्मासदृशीं सभां प्रपेदे । सचापकौ, चापविलोकलोलौ तौ कोसलराजपुत्रौ [अपि] आपतुः ।
- तात्पर्य्यम् – एवमुक्त्वा विश्वामित्रः इन्द्रसभातुल्यं जनकस्य आस्थानं प्रविष्टवान् । तेन सह धनुर्धरौ रामलक्ष्मणौ अपि शिवधनुषः दर्शनोत्सुकौ आस्थानं प्राप्तवन्तौ ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# ततो महर्षिर्जनकस्य राज्ञः सभां सुधर्मासदृशीं प्रपेदे।
# तौ चापतुश्चापविलोकलोलौ सचापकौ कोसलराजपुत्रौ॥१०२॥

- सुधर्मासदृशीम् – सुधर्मया सदृशी, ताम् । “स्यात् सुधर्मा देवसभा” (अमरः)
- प्रपेदे – प्र + “पद गतौ” – लिट्, प्रथम.१
- आपतुः – “आप्लृ व्याप्तौ” – लिट्, प्रथम.२
- सचापकौ – चाप एव चापकः । चापकेन सहितौ । “धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्” (अमरः)
- यमकालङ्कारः, उपजातिः वृत्तम् (१,२,४ उपेन्द्रवज्रा, ३ इन्द्रवज्रा)

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

तत्र विधिवदभ्यर्चितः कथितदशरथतनयवृत्तान्तः कौशिकः कौशिकप्रमुखैरमरैरस्मत्कुलमहत्तरे देवराते निक्षिप्तं विशेषतः सीताशुल्कार्थं मया रक्षितमिदमिति जनकेन प्रदर्शितस्य चापस्यारोपणाय राममादिदेश।

- तत्र, विधिवत्, अभ्यर्चितः, कथित-दशरथ-तनय-वृत्तान्तः, कौशिकः, कौशिक-प्रमुखैः, अमरैः, अस्मत्-कुल-महत्तरे, देवराते, निक्षिप्तम्, विशेषतः, सीता-शुल्क-अर्थम्, मया, रक्षितम्, इदम्, इति, जनकेन, प्रदर्शितस्य, चापस्य, आरोपणाय, रामम्, आदिदेश
- तत्र = जनकसभायाम्
- विधिवत् = यथाशास्त्रम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

तत्र विधिवदभ्यर्चितः कथितदशरथतनयवृत्तान्तः कौशिकः कौशिकप्रमुखैरमरैरस्मत्कुलमहत्तरे देवराते निक्षिप्तं विशेषतः सीताशुल्कार्थं मया रक्षितमिदमिति जनकेन प्रदर्शितस्य चापस्यारोपणाय राममादिदेश।

- अभ्यर्चितः = पूजितः
- कथितदशरथतनयवृत्तान्तः = रामलक्ष्मणयोः कुल-शील-कर्मादिकं विवृत्य
- कौशिकः = विश्वामित्रः
- कौशिकप्रमुखैः = इन्द्रादिभिः
- अमरैः = देवैः

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

तत्र विधिवदभ्यर्चितः कथितदशरथतनयवृत्तान्तः कौशिकः कौशिकप्रमुखैरमरैरस्मत्कुलमहत्तरे देवराते निक्षिप्तं विशेषतः सीताशुल्कार्थं मया रक्षितमिदमिति जनकेन प्रदर्शितस्य चापस्यारोपणाय राममादिदेश।

- अस्मत्कुलमहत्तरे = अस्माकं वंशस्य श्रेष्ठे
- देवराते = विदेहराजे
- निक्षिप्तम् = विन्यस्तम्
- इदम् = धनुः
- विशेषतः = विशेषप्रकारेण

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

तत्र विधिवदभ्यर्चितः कथितदशरथतनयवृत्तान्तः कौशिकः कौशिकप्रमुखैरमरैरस्मत्कुलमहत्तरे देवराते निक्षिप्तं विशेषतः सीताशुल्कार्थं मया रक्षितमिदमिति जनकेन प्रदर्शितस्य चापस्यारोपणाय राममादिदेश।

- सीताशुल्कार्थम् = सीतायाः विवाहमूल्यार्थम्
- मया = जनकेन
- रक्षितम् = गुप्तम्
- इति = एवम्
- जनकेन = महाराजेन

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

तत्र विधिवदभ्यर्चितः कथितदशरथतनयवृत्तान्तः कौशिकः कौशिकप्रमुखैरमरैरस्मत्कुलमहत्तरे देवराते निक्षिप्तं विशेषतः सीताशुल्कार्थं मया रक्षितमिदमिति जनकेन प्रदर्शितस्य चापस्यारोपणाय राममादिदेश।

- प्रदर्शितस्य = सन्दर्शितस्य
- चापस्य = धनुषः
- आरोपणाय = अवनमनाय
- रामम्
- आदिदेश = आज्ञापितवान्

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

तत्र विधिवदभ्यर्चितः कथितदशरथतनयवृत्तान्तः कौशिकः कौशिकप्रमुखैरमरैरस्मत्कुलमहत्तरे देवराते निक्षिप्तं विशेषतः सीताशुल्कार्थं मया रक्षितमिदमिति जनकेन प्रदर्शितस्य चापस्यारोपणाय राममादिदेश।

- तात्पर्य्यम् – आस्थाने जनकेन पूजितः विश्वामित्रः रामलक्ष्मणौ परिचायितवान् । ततः जनकः "इदं शिवधनुः इन्द्रादिभिः देवैः अस्माकं पूर्वजे देवराते विन्यस्तम् । मया सीताविवाहस्य मूल्यमिति निश्चितम्" इत्युक्त्वा धनुः दर्शयामास । विश्वामित्रः तं चापम् आरोपयितुं रामम् आज्ञापितवान् ।

तत्र विधिवदभ्यर्चितः कथितदशरथतनयवृत्तान्तः कौशिकः कौशिकप्रमुखैरमरैरस्मत्कुलमहत्तरे देवराते निक्षिप्तं विशेषतः सीताशुल्कार्थं मया रक्षितमिदमिति जनकेन प्रदर्शितस्य चापस्यारोपणाय राममादिदेश।

- कथितदशरथतनयवृत्तान्तः – दशरथस्य तनयौ, दशरथतनययोः वृत्तान्तः, कथितः दशरथतनयवृत्तान्तः येन सः
- कौशिकः – "गाधेयो विश्वामित्रश्च कौशिकः", "महेन्द्र गुग्गुलु-उलूक-व्यालग्राहिषु कौशिकः" (अमरः)
- आदिदेश – आ+ "दिश अतिसर्जने" + लिट्, प्रथम.१

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam - Value Education - Technology

# सङ्क्षेपः

- मिथिलामाहात्म्यम् – देव्या यस्या
- सीताविवाहस्य पणः
- धनुरारोपणाय विश्वामित्रस्य आज्ञा






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in